स्वर उदात्तादिः। तत्रोक्तः--

'उदात्तश्चानुदात्तश्च स्वरितश्च, स्वरास्त्रयः।' (पा० शि० ११)। इति। मात्रा ह्रस्वादिः। सापि तत्र उक्ता—

'ह्रस्वो दीर्घ. प्लुत इति कालतो नियमा अचि।' (पा० शि० ११) इति।

बलं स्थानप्रयत्नौ। तत्र 'अष्टौ स्थानानि वर्णानाम्' (पा० शि० ११) इत्यादिना स्थानमुक्तम्। 'अचोऽस्पृष्टाः, यणस्त्वीषद्' (पा० शि० ३७) इत्यादिना प्रयत्न उक्तः—

सामशब्देन साम्यमुक्तम् अतिद्रुतातिविलम्बितमीत्यादिदोष-राहित्येन माधुर्यादिगुणयुक्तत्वेन उच्चारणं साम्यम्। 'गीती शीघ्री शिरःकम्पी' (पा० शि० ३२) इत्यादिना, 'उपांशु दुष्टं त्वरितम्' (पा० शि० ३५) इत्यादिना च दोषा उक्ताः। 'माधुर्यमक्षरव्यक्तिः' (पा० शि० ३३) इत्यादिना गुणा उक्ताः।

---

ग्रन्थ में स्पष्ट कहा गया है--'शम्भु के मत में तिरसठ या चौंसठ वर्ण माने गये हैं। प्राकृत और संस्कृत में भी स्वयं स्वयम्भु ने कहा है।

उदात्तादि स्वर हैं। उन्हें भी वहाँ कहा गया गया है--'उदात्त, अनुदात्त और स्वरित ये तीन स्वर हैं।

ह्रस्वादि मात्रा हैं। इसका भी वहीं पर कथन है--ह्रस्व, दीर्घ, प्लुत ये मात्रायें काल के नियमानुसार स्वर में होती हैं।

स्थान और प्रयत्न को बल कहते हैं। 'वर्णों के आठ स्थान हैं' इत्यादि के द्वारा स्थान कहा गया है। अच्=स्वर का अस्पृष्ट यण्=यवरल का इष-त्स्पृष्ट, इत्यादि से प्रयत्न कहा गया है।

साम शब्द के द्वारा साम्य को कहा गया है। अतिद्रुत, अतिबिलम्बित, गीति आदि दोषों से रहित तथा माधुर्यादि गुणों से युक्त उच्चारण को साम्य कहते हैं। 'गीती शीघ्री शिरःकम्पी' इत्यादि के द्वारा और 'उपांशु दुष्टं त्वरि-तम्' इत्यादि के द्वारा दोषों का कथन किया गया है।

'माधुर्यमक्षरव्यक्तिः' इत्यादि के द्वारा गुणों को कहा गया है।

सन्तानः संहिता—'वायवायाहि' (ऋ० सं० ३।२।१) इत्यत्रावादेशः 'इन्द्राग्नी आगतम्' (ऋ०सं०३।१२।१) इत्यत्र प्रकृतिभावः। एतच्च व्याकरणेऽभिहितत्वात् शिक्षायाम् उपेक्षितम्। शिक्ष्यमाणवर्णातिवैकल्ये बाधस्तत्रोदाहृतः—

'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'
(पा० शि० ५२) इति।

इन्द्रशत्रुर्वर्धस्व (तै० सं० २।४।१२।१) इत्यस्मिन् मन्त्रे इन्द्रस्य शत्रुर्घातकः इत्यस्मिन् विवक्षितेऽर्थे तत्पुरुषसमासे 'समासस्य' (पा० अ० ६।१।२२२) इति सूत्रेण तत्पुरुषत्वाद् अन्तोदात्तेन भवितव्यम्। आद्युदात्तस्तु प्रयुक्तः! तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वाद्

सन्तान का अर्थ संहिता है अर्थात् एक पद का दूसरे पद से अतिशय सन्निकर्ष है। 'वायवायाहि' वायो आयाहि यहाँ दोनों पदों के बीच अवादेश है। अर्थात् इन दो पदों के एक साथ उच्चरित होने से संधि होकर 'वायवायाहि' रूप हुआ। 'इन्द्राग्नि आगतम्' यहाँ प्रकृतिभाव हुआ है। व्याकरण में इसका उल्लेख होने के कारण शिक्षा में इस विषय की उपेक्षा की गई है। शिक्षा नियमों के अनुसार वर्णों का शुद्ध उच्चारण न होने पर जो दोष होता है उसे उदाहरण देकर बतलाया है—'जो मन्त्र स्वर या वर्ण से हीन होता है वह मिथ्या प्रयुक्त होने के कारण उस अर्थात् अभीष्ट अर्थ को नहीं कहता है। वह वाग्वज्र बनकर यजमान का ही नाश कर देता है, जिस प्रकार स्वर के अपराध से 'इन्द्रशत्रु' शब्द ने यजमान को ही नष्ट कर दिया' (पा० शि० ५२)। 'इन्द्रशत्रुर्वर्धस्व' इस मन्त्र में विवक्षित अर्थ था कि इन्द्र का शत्रु अर्थात् घातक बढ़े। यहाँ षष्ठी तत्पुरुष समास 'इन्द्रस्य शत्रुः' यह अभीष्ट था और तत्पुरुष समास 'इन्द्रस्य शत्रुः' यह अभीष्ट था और तत्पुरुष होने के कारण 'समासस्य' सूत्र से इसे अन्तोदात्त होना चाहिये था। किन्तु आद्युदात्त का उच्चारण किया गया। ऐसा होने पर पूर्वपद प्रकृति स्वर से यह बहुव्रीहि बन गया और 'इन्द्र

इन्द्रः घातको यस्य इत्यर्थः सम्पन्नः। तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः।

कल्पस्योपयोगव्युत्पत्तिप्रदर्शनपूर्वकं निरूपणम्:—

कल्पस्तु आश्वलायनापस्तम्बबोधायनादिसूत्रम्, कल्प्यते समर्थ्यते यागप्रयोगोऽत्र इति व्युत्पत्तेः।

ननु आश्वलायनः किं मन्त्रकाण्डमनुसृत्य प्रवृत्तः किं वा ब्राह्मणमनुसृत्य। नाद्यः, 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः' (आ० श्रौ० सू० १।१) इत्येवं तेनोपक्रान्तत्वात्। 'न हि अग्निमीळे' (ऋ० सं० १।१।१) इत्यादयो मन्त्रा दर्शपूर्णमासयोः क्वचिद् विनियुक्ताः। न द्वितीयः, 'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयमेकादशकपालम्' (ऐत० ब्रा० १।१) इत्येव दीक्षणीयेष्टेर्ब्राह्मणे प्रक्रान्तत्वात्।

अत्रोच्यते--मन्त्रकाण्डो ब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण। ब्रह्मयज्ञश्चैवं विहितः—यत् स्वाध्यायमधीयीतैकाम-

---

है घातक जिसका' यह अर्थ हो गया। इसलिये स्वर, वर्ण आदि अपराधों के परिहार के लिये शिक्षाग्रन्थ अपेक्षित है।

कल्प

आश्वलायन आपस्तम्ब बोधायन आदि के सूत्रों को कल्प कहा जाता है। कल्प की व्युत्पत्ति है --जहाँ याग के प्रयोग की कल्पना अथवा समर्थन किया जाय।

यहाँ शङ्का होती है कि आश्वलायन क्या मन्त्रकाण्ड का अनुसरण करके प्रवृत्त है या ब्राह्मण का अनुसरण करके। पहला सम्भव नहीं क्योंकि 'दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः' के अनुसार आश्वलायन ने दर्श और पूर्णमास की व्याख्या से अपना श्रौतसूत्र प्रारम्भ किया है। और 'अग्निमीळे' (ऋ० सं० १।१।१) इत्यादि मन्त्र दर्श और पूर्णमास में कहीं भी विनियुक्त नहीं हैं। दूसरा भी नहीं हो सकता क्योंकि 'आग्नावैष्णवं पुरोडाशं निर्वपन्ति दीक्षणीयामेकादशकपालम्' के अनुसार ब्राह्मण में दीक्षणीया इष्टि से प्रारम्भ हुआ है।

अब कहते हैं कि मन्त्र-काण्ड ब्रह्मयज्ञादि के जप के क्रम से प्रवृत्त हुआ है, यागानुष्ठान के क्रम से नहीं। ब्रह्मयज्ञ का विधान इस प्रकार है—'जो एक

प्यृचं यजुः साम वा तद् ब्रह्मयज्ञः' ( तै० आ० २।१० ) इति। सोऽयं ब्रह्मयज्ञजपोऽग्निमील इत्याम्नायक्रमेणैव अनुष्ठेयः। तथा सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि सामानि 'वाचःस्तोमे पारिप्लवं शंसति' इति विधीयते। यथा आश्विने सस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयाद्' ( आप० श्रौतसूत्र १४।१।२ ) इति विधीयते, रिच्यत इव वा एष प्रेवरिच्यते, यो याजयति प्रति वा गृह्णाति, याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत' ( तै० आ० २।१६ ) इति प्रायश्चितरूपं वेदपारायणं विहितम् — इत्यादिषु कृत्स्नमन्त्रकाण्डविनियोगेषु सम्प्रदायपारम्पर्यागत एव क्रम आदरणीयः।

विशेषविनियोगांस्तु मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादिप्रमाणानि उपजीव्य आश्वालायनो दर्शयति। अतो मन्त्रकाण्डक्रमाभावेऽपि न कश्चिद् विरोधः।

---

भी ऋचा, यजुः या साम का स्वाध्याय के रूप में अध्ययन कर लेता है वह ब्रह्मयज्ञ है।' इस ब्रह्मयज्ञ जप का 'अग्निमीले' इस आम्नाय क्रम से अनुष्ठान करना चाहिये। इसी प्रकार सभी ऋचाओं, सभी यजुषों और सभी सामों का 'वाचः स्तोमे पारिप्लवं शंसति' इस वाक्य से विधान हुआ है। उसी प्रकार आश्विन शास्त्र में 'सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयात्' ( आप० श्रौतसूत्र १४।१।२ ) इस वाक्य से ऋग्वेद की सभी ऋचाओं का विधान किया गया है। उसी प्रकार 'रिच्यत इव वा एष प्रेवरिच्यते, यो याजयति प्रति वागृह्णति, याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत' ( तै० आ० २।१६ ) यहाँ प्रायश्चित्त के रूप में वेद पारायण का विधान विहित है। इस प्रकार के पूरे मन्त्रों का विनियोगों में सम्प्रदाय परम्परा से आये हुए ही क्रम का आदर करना चाहिये।

मन्त्रविशेषों के विशेष विनियोगों को तो आश्वलायन ने श्रुति, लिङ्ग, वाक्य प्रकरण, स्थान, समाख्या इन छ प्रमाणों को उपजीव्य मानकर दिखलाया है। इसलिये मन्त्रकाण्ड के क्रम के न होने पर भी कोई विरोध नहीं है।

'इषे त्वा' इत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैव आम्नाता इत्याप-स्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिषु अपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रान्ता तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वाद् आश्वालायनस्य आदौ तद् व्याख्यानं युक्तम्। अतः कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमु-पदिश्य उपकरोति।

तर्हि 'प्र वो वाजा' (ऋ० सं० ३।२७।१) इत्यादिना सामिधे-नीनाम् ऋचामेव विनियोगमाश्वलायनो ब्रवीतु; 'नमः प्रवक्त्रे' इत्या-दस्त्वनाम्नाताः कुतो विनियुज्यन्ते (आश्व० सूत्र १।२) इति चेत्? नायं दोषः, शाखान्तरसमाम्नातानां ब्राह्मणान्तरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेन अत्र वक्तव्यत्वात्; सर्वशाखा-प्रत्ययमेकं कर्म इति न्यायविदः। तस्मात् शिक्षेव कल्पोऽपि अपेक्षितः।

---

'इषे त्वा' इत्यादि मन्त्र तो यज्ञानुष्ठान के क्रम से ही आम्नात हैं इसलिये आपस्तम्ब आदि उसी क्रम से सूत्र के निर्माण में प्रवृत्त हुए। संहिता में आम्नात होने के कारण जप आदि में भी वही क्रम रहेगा। यद्यपि ब्राह्मण में दीक्षणीय इष्टि से प्रारम्भ हुआ है तथापि वह इष्टि दर्श और पूर्णमास की विकृति होने से उसकी अपेक्षा आश्वलायन के आदि में जो दर्श पूर्णमास का व्याख्यान है वह युक्त ही है, क्योंकि प्रकृति के आधार पर विकृति का अनुष्ठान होता है। अतः कल्प सूत्र मन्त्र-विनियोग के द्वारा यज्ञानुष्ठान का उपदेश कर उपकार करता है।

तो 'प्र वो वाजा' (ऋ० सं० ३।२७।१) इत्यादि सामिधेनी ऋचाओं के विनियोग को आश्वलायन को बतलाना चाहिये। 'नमः प्रवक्त्रे' (आश्व० श्रौ० सू० १।२) इत्यादि ऋचायें तो ऋग्वेद में आम्नात नहीं हैं' तो उनका विनियोग आश्वलायन क्यों बतलाते हैं, यह कोइ दोष नहीं है। दूसरी शाखा में आम्नात तथा अन्य ब्राह्मण से सिद्ध विनियोग को गुणोपसंहार न्याय से कह देना अनुचित नहीं है। सभी शाखाओं में भिन्न भिन्न कहे जाने से कोई कर्म भिन्न-भिन्न नहीं हो जाता, एक ही रहता है। इसलिये शिक्षा की तरह कल्प भी अपेक्षित है।

व्याकरणस्य लक्षणनिर्देशमुखेन प्रयोजनविशेषाणां वररुचिपतञ्जलिप्रदर्शितदिशा सम्यग्विविच्य विस्तरशः प्रतिपादनम्—

व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयाय उपयुज्यते। तथा च ऐन्द्रवायवग्रहब्राह्मणे समाम्नायते—'वाग्वै पराच्यव्याकृतावदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्, वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याता इति तस्माद् ऐन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते' (तै० सं० ६।४।७।३) इति। अग्निमीळे पुरोहितमित्यादिवाक् पूर्वस्मिन् काले पराची समुद्रादिध्वनिवदेकात्मिका सत्यव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रन्थरहिता आसीत्। तदानीं देवैः प्रार्थित इन्द्र एकस्मिन् एव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टस्तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्र अकरोत्। तस्मादियं बाग् इदानीमपि पाणिन्यादि-

---

### व्याकरण

व्याकरण भी प्रकृति, प्रत्यय आदि के उपदेश के द्वारा पद के स्वरूप और और अर्थ के निश्चय के मिये प्रयुक्त होता है। जैसा कि ऐन्द्र-वायव ग्रह ब्राह्मण में कहा गया है—'प्राचीन काल में वाक् अव्याकृत और अस्पष्ट रही। तब देवताओं ने इन्द्र से कहा वाक् को हमारे लिये व्याकृत करो। इन्द्र ने कहा मुझे एक वर दो, मुझे और वायु के साथ साथ सोम दिया जाय। अतः इन्द्र और वायु को एक साथ सोम ग्रहण कराया जाता है। तब इन्द्र ने वाक् को मध्य से विच्छेद करके उसे व्याकृत कर दिया। तब से इस व्याकृत वाक् का उच्चारण होता है' (तै० सं० ६।४।७।३)। 'अग्निमीले पुरोहितम्' इत्यादि वाक् प्राचीन काल में समुद्र आदि की ध्वनि की भाँति एकरूप होने के कारण अव्याकृत भी है। उस समय प्रकृति, प्रत्यय, पद और वाक्य इत्यादि विभाग युक्त ग्रन्थों का अभाव था। उस समय देवताओं के द्वारा प्रार्थित इन्द्र ने एक ही पात्र में वायु और अपने लिये सोमरस के ग्रहण करने के वर से प्रसन्न होकर उस अखण्ड वाणी को बीच में विच्छेद करके प्रकृति, प्रत्यय आदि के रूप में

महर्षिभिर्व्याकृता सर्वैः पठ्यते इत्यर्थः।

तस्य एतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः—'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति। एतानि रक्षादि-प्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि (महाभाष्यस्पशाह्निके)। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति वेदार्थं चाध्यवस्यति। ऊहः खल्वपि, न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः, ते च अवश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणम-यितव्याः। तान् नावैयाकरणः शक्नोति विपरिणमयितुम्' तस्मादध्येयं व्याकरणम्।

आगमः खल्वपि, 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। प्रधानञ्च षट्सु अंगेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति। लघ्वर्थं चाध्येयं व्याकरणम्। बृह-

---

सर्वत्र विभक्त कर दिया। इसलिये यह वाणी अब भी पाणिनि आदि महर्षियों के द्वारा प्रकृति-प्रत्ययों मे विभक्त होकर लोगों द्वारा पढ़ी जाती है।

उस व्याकरण के प्रयोजन विशेष को वररुचि ने अपने वार्तिक ग्रन्थ में दिखलाया है—'रक्षा, ऊह, आगम, लघु तथा असन्देह ये प्रयोजन हैं। ये रक्षादि प्रयोजन तथा अन्य प्रयोजन महाभाष्य में पतञ्जलि के द्वारा स्पष्ट किये गये हैं। वेदों की रक्षा के लिये व्याकरण पढ़ना चाहिये। लोप, आगम, वर्ण, विकार को जानने वाला व्यक्ति ही वेदों का ठीक तरह से परि-पालन करेगा और वेदार्थ को समझ सकेगा।

ऊह भी प्रयोजन है। वेद में मन्त्र सभी लिङ्गों और सभी विभक्तियों सहित नहीं पढ़े गये हैं उन्हें यज्ञ करने वाले को अवश्य ही यथाप्रसङ्ग उचित रीति से बदलना चाहिये।

आगम भी व्याकरण के अध्ययन का प्रयोजन है। 'ब्राह्मण को बिना कारण धर्मस्वरूप छ अङ्गों वाले वेद को पढ़ना चाहिये।' छ अङ्गों में व्याकरण ही प्रधान है। और प्रधान में किया हुआ यत्न विशेष फलवान् होता है।

एवं लाघव के लिये भी व्याकरण पढ़ना चाहिये। बृहस्पति ने इन्द्र को एक

स्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्च अध्येता, दिव्यं वर्षसहस्रम् अध्ययनकालः, अन्तं च न जगाम। अद्य तु पुनर्यदि परमायुर्भवति स वर्षशतं जीवति। तत् कुतः प्रतिपदपाठेन सकलपदावगमः, कुतस्तरां प्रयोगेण ? असन्देहार्थं चाध्येयं व्याकरणम्, याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत इति। तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती, किं वा स्थूला चासौ पृषतीति। तान् न वैयाकरणः स्वरतोऽध्यवस्यति। यदि समासान्तोदात्तत्वं तदा कर्मधारयः, अथ पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरिति।

इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि तेऽसुराः,दुष्टः शब्दः, यदधीतम् यस्तु प्रयङ्क्ते, अविद्वांसः, विभक्ति कुर्वन्ति, यो वा इमाम्,

---

हजार दिव्य वर्षों तक प्रतिपदोक्त शब्दों का शब्द-पारायण सुनाया पर अन्त तक न पहुंचे। बृहस्पति जैसा वक्ता और इन्द्र जैसा अध्येता अर्थात् पढ़ने वाला। एक हजार दिव्य वर्ष पढ़ने का समय और फिर भी अन्त तक नहीं पहुंचे। आजकल तो कहना ही क्या, जो बहुत आयु वाला होता है वह सौ वर्ष जीता है। इसलिये प्रतिपद पाठ के द्वारा कैसे सभी पदों का ज्ञान प्राप्त कर सकता है; उन पदों के प्रयोग करने का तो प्रश्न ही कहां ? सन्देह की निवृत्ति के लिये भी व्याकरण पढ़ना चाहिये। याज्ञिक लोग पढ़ते हैं—स्थूलपृषती गाय को अग्नि तथा वरुण देवताओं के उद्देश्य से आलम्बन करें। यहाँ पर स्थूलपृषति' इस विशेषण का पता नहीं चलता कि इसका 'स्थूलानि पृषन्ति यस्याः सा स्थूलपृषति' यह अर्थ है अथवा 'स्थूला चासौ पृषति' यह अर्थ है। उसे अवैयाकरण स्वर से निश्चय नहीं कर सकेगा किन्तु वैयाकरण जान लेगा कि यदि समास का अन्तिम पद उदात्त है तो कर्मधारय होता है, और यदि पूर्वपद में उदात्त है तो बहुव्रीहि होता हैं।

शब्दानुशासन के ये निम्नलिखित भी प्रयोजन हैं

तेऽसुराः। दुष्टः शब्दः। यदधीतम्। यस्तु प्रयुङ्क्ते। अविद्वांसः। विभक्ति।

चत्वारि, उत त्वः, सक्तुमिव, सारस्वतीम्, दशम्यां पुत्रस्य, सुदेवोऽसि वरुण इति।

तेऽसुराः--

तेऽसुराः 'हेलयो हेलय' इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः। म्लेच्छा मा भूम इत्यध्येयं व्याकरणम्।

दुष्टः शब्दः--

'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'
(पा० शि० ५२)

दुष्टान् शब्दान् मा प्रयुक्ष्महीति अध्येयं व्याकरणम्।

यदधीतम्--

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

---

कुर्वन्ति। यो वा इमाम्। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीम्। दशम्यां पुत्रस्य। सुदेवो असि वरुण इति।

तेऽसुराः—

वे असुर हेलयः हेलयः करते हुए पराजित हो गये। इसलिये ब्राह्मण को अपशब्द का प्रयोग नहीं करना चाहिये। जो अपशब्द है वह निश्चय ही म्लेच्छ है हम म्लेच्छ न हों इसलिये व्याकरण का अध्ययन करना चाहिये।

दुष्टः शब्दः—

स्वर या वर्ण की दृष्टि से दोषयुक्त शब्द प्रयुक्त होने के कारण अभीष्ट अर्थ का बोधन नहीं होता है वह, वाग्वज्र बनकर यजमान को भी मार देता है; जिस प्रकार स्वर के अपराध से 'इन्द्रशत्रुः' शब्द यजमान का ही विनाशक हुआ' (पा० शि० ५२)। हम दोषयुक्त शब्दों का प्रयोग न करें, इसलिये हमें व्याकरण पढ़ना चाहिये।

यदधीतम् —

'जिस वेद वाक्य को आचार्य से पढ़ लिया पर अर्थ नहीं समझा जो पाठ रूप से पुनः-पुनः उच्चरित किया जाता है, वह अग्निरहित प्रदेश में फेंके हुए

अविज्ञातमनर्थकं माधिगीष्महि इति अध्येयं व्याकरणम् ।
यस्तु प्रयुङ्क्ते —
यस्तु प्रयुङ्क्ते कुशलो विशेषो शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥

कः ? वाग्योगविदेव । यो हि शब्दान् जानाति अपशब्दान् अप्यसौ जानाति । यथैव शब्दज्ञाने धर्मं एवमपशब्दज्ञानेऽपि अधर्मः प्राप्नोति । भूयांसो हि अपशब्दा अल्पीयांसः शब्दाः, एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः, यथा—गौरित्येतस्य शब्दस्य गावी, गोणी, गोता, गोपोतलिकेत्येवमादयः । अथ योऽवाग्योगविद् अज्ञानं तस्य शरणम् । विषम उपन्यासः । न अत्यन्तायाज्ञानं शरणं भवितुमर्हति । यो हि अजानन् वै ब्राह्मणं हन्यात् सुरां वा पिवेत् सोऽपि मन्ये पतितः स्यात् । एवं तर्हि कः ? अवाग्योगविदेव । अथ यो वाग्योगविद्, ज्ञानं तस्य शरणम् ।

---

शुष्क काष्ठ की तरह, कभी भी अपने अर्थ को प्रकाशित नहीं करता है' अर्थात् जिस प्रकार अग्नि रहित प्रदेश में फेंका हुआ शुष्क काष्ठ नहीं जलता है उसी प्रकार विना अर्थ को जाने हुए पढ़ा गया वेद वाक्य भी अपने अर्थ को प्रकाशित नहीं करता है ।

हम अविज्ञात अर्थात् विना अर्थ समझे अध्ययन न करें इसलिये व्याकरण पढ़ना चाहिये ।

'जो कुशल व्यक्ति व्यवहार के समय यथावत् अर्थात् ठीक-ठीक शब्दों का प्रयोग करता है वह वाग्योगवित् परलोक में अनन्त विजय को प्राप्त करता है । इसके विपरीत वाणी के योग को न जानने वाला व्यक्ति अपशब्दों से दूषित हो जाता है ।'

कौन ? (शंकापक्षी कहता है) वाणी के योग को जानने वाला ही । क्योंकि जो शब्दों को जानता है वह अपशब्दों को भी जानता है । जिस प्रकार शब्द ज्ञान में धर्म है उसी प्रकार अपशब्द ज्ञान में अधर्म है अथवा अधर्म अधिक प्राप्त होता है । क्योंकि अपशब्द अधिक हैं, शब्द कम हैं । एक-एक शब्द के

अविद्वांसः—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ।।

स्त्रीवन्मा भूम इत्यध्येयं व्याकरणम् ।

विभक्तिं कुर्वन्ति—

यज्ञिकाः पठन्ति, , प्रयाजाः सविभक्तिकाः कार्याः' इति । न च अन्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् । तस्मादध्येयं व्याकरणम् ।

यो वा इमाम्—

यो वा इमा पदशः स्वरशोऽक्षरशो वर्णशो वाचं विदधाति स आर्त्विजीनो भवति ।

आर्त्विजीनाः स्याम इत्यध्येयं व्याकरणम् ।

चत्वारि—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां अविवेश ।।

( ऋ० सं० ४।५८।३ )

---

बहुत से अपभ्रंश होते हैं। जैसे गो शब्द के गावी, गोणी, गोपोतलिका इत्यादि। अब जो वाणी के योग को नहीं जानता है, अज्ञान उसकी शरण है। यह कथन उचित नहीं है ( सिद्धान्तपक्षी के अनुसार )। अज्ञान पूर्ण रूप से शरण होने में असमर्थ है अर्थात् नहीं हो सकता है। क्योंकि जो न जानता हुआ ब्राह्मण की हत्या कर दे अथवा सुरापान करे मैं मानता हूं कि वह भी पतित हो जायेगा। पुनः शङ्कापक्षी आशङ्का करता है कि दूषित कौन होगा ? सिद्धान्ती कहता है– अवाग्योगविद् ही। क्योंकि जो वाग्योगविद् है उसका ज्ञान ही उसकी शरण है।

जो अविद्वान् अभिवादन के उत्तर में दिये जाने वाले आशीर्वाद-वाक्य में अभिवादक के नाम को प्लुत करके बोलना नहीं जानते, प्रवास से लौटकर उनके प्रति 'अयमहम्' ऐसा कहे जैसा कि स्त्रियों के प्रति कहा जाता है।

( अभिवादक द्वारा किये गये अभिवादन में ) हमारे प्रति स्त्रियों जैसा व्यवहार न हो, इसलिये हमें व्याकरण पढ़ना चाहिये।

चत्वारि शृङ्गा, चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादास्त्रयः कालाः भूतभविष्यद्वर्तमानाः। द्वे शीर्षे सुप्तिङश्च। सप्तहस्तासः सप्तविभक्तयः। त्रिधा बद्धः, त्रिषु स्थानेषु बद्धः, उरसि कण्ठे शिरसि च। वृषभो वर्षणात् कामानाम्। रोरवीति रौतिः, शब्दकर्मा। महो देवो मर्त्याम् आविवेश। महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणम्।

अथ वा; चत्वारि—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥
(ऋ० सं० १।१६४।४५)

---

याज्ञिक लोग पढ़ते हैं—'प्रयाज मन्त्रों को विभक्तियुक्त करना चाहिये। और व्याकरण के विना प्रयाज-मन्त्रों को विभक्तियुक्त नहीं किया जा सकता है। इसलिये व्याकरण का अध्ययन करना चाहिये।

जो व्यक्ति इस वाणी का पद, स्वर अक्षर और वर्ण से ठीक-ठीक उच्चारण करता है वह आर्त्विजीन अर्थात् ऋत्विक् कर्म कराने का अधिकारी होता है।

हम ऋत्विक् कर्म कराने के अधिकारी हों इसलिये हमें व्याकरण पढ़ना चाहिए।

'इसके चार सींग हैं, तीन पैर हैं, दो सिर हैं, सात हाथ हैं। तीन स्थानों में बँधा हुआ यह वृषभ जोर से चिल्ला रहा है। महान् देव ने मनुष्य में प्रवेश किया।' चार सींग चार पद राशियाँ—नाम, आख्यात, उपसर्ग और निपात हैं। इसके तीन पैर भूत, वर्तमान और भविष्य ये तीन काल हैं। और सुप्, तिङ् इसके दो सिर हैं। सात विभक्तियाँ सात हाथ हैं। त्रिधा बद्धः अर्थात् तीन स्थानों—हृदय, कण्ठ और शिर में बँधा हुआ है। कामनाओं की वर्षा करने से वह वृषभ है। रोरवीति अर्थात् शब्द करता है, रु धातु का अर्थ शब्द करना है। महान् देवस्वरूप शब्द ने मनुष्यों में प्रवेश किया है। उस महान् देव के साथ हमारा तादात्म्य हो, इसलिऐ हमें व्याकरण पढ़ना चाहिये।

वाणी चार पादों में परिमित है इन चार पादों को मनीषी ब्राह्मण ही

ये मनीषिणः, मनस, ईषिणो मनीषिणः। गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते न निमीषन्ति। तुरीयं वाचो मनुष्या वदन्ति। तुरीयं ह वा एतद् वाचो यन्मनुष्येषु वर्तते।

उत त्वः—

उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः॥
(ऋ० सं० १०।७१।४)

अपि खलु एकः पश्यन् अपि न पश्यति शृण्वन् अपि न शृणोति एनाम्। अविद्वांसमाह अर्द्धम्। त्वस्मै अन्यस्मै तन्वं विसस्रे, तनुं विवृणुते। जायेव पत्य उशती सुवासाः। यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते एवं वाग् वाग्विदे स्वम् आत्मानं विवृणुते। वाक् स्वं नो विवृणुयादित्यादित्यध्येयं व्याकरणम्।

सक्तुमिव—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।

---

जानते हैं। तीन भाग गुहा में छिपे हुए हैं, वे उसे जानने की चेष्टा नहीं करते, पलक भीं नहीं मारते। यह वाणी का चौथा भाग है जो मनुष्यों में विद्यमान है।

'एक अविद्वान् वाणी को देखता हुआ भी नहीं देखता, कोई इसे सुनता हुआ भी नहीं सुनता है। वही वाणी किसी के प्रति अपने शरीर को खोलकर रख देती है, जिस प्रकार सुन्दर वस्त्र पहने हुए, कामना करती हुई स्त्री अपने पति के प्रति अपने शरीर को खोल कर रख देती है।'

एक इस वाणी को देखता हुआ भी नहीं देखता, सुनता हुआ भी नहीं सुनता। ऋक् का आधा भाग अविद्वान् के विषय में कहता है। एक अन्य के लिये अपने शरीर को खोलकर रख देती है। जिस प्रकार पति की कामना करती हुई, सुन्दर वस्त्र पहने हुए पत्नी अपने आपको पति के सामने प्रकट कर देती है उसी तरह वाणी वाणी को जानने वाले के प्रति अपने स्वरूप को प्रकट कर देती है। वाणी अपने स्वरूप को हमारे लिए प्रकट कर दे, इसलिये हमें व्याकरण पढ़ना चाहिये।

'ज्ञानी लोग अपने मन के द्वारा वाणी को उस प्रकार शुद्ध करके बोलते हैं जिस प्रकार चलनी से छानकर सत्तू को शुद्ध कर दिया जाता है। तब सखा

अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥
(ऋ० सं० १०।७१।२)

सक्तुः सचतेर्दुर्धावो भवति। कसतेर्वा स्याद् विपरीतस्य, विकसितो भवति। तितउ परिपवनं भवति; ततवद् वा तुन्नवद् वा। धीराः प्रज्ञानवन्तो ध्यानवन्तो मनसा प्रज्ञानेन वाचमक्रत वाचमकृषत। अत्रा सखायः सख्यानि जानते अत्र सखायः सख्यानि सञ्जायते सायुज्यानि जानते। क्व? एष दुर्गमो मार्ग एकगम्यो वाग्विषयः। के पुनस्ते? वैयाकरणाः। कुत एतत्? भद्रैषां लक्ष्मीर्निहिताधिवाचि। एषां वाचि भद्रा लक्ष्मीर्निहिता भवति। लक्ष्मीर्लक्ष्मणाद् भासनात् परिवृढा भवति।

सारस्वतीम्—

यज्ञिकाः पठन्ति, 'आहिताग्निरपशब्दं प्रयुञ्जानः प्रायश्चित्तीया सरस्वतीमिष्टिं निर्वपेद्' इति।

---

सभान ज्ञान युक्त लोग शब्दाभिन्न ब्रह्म के सायुज्य का अनुभव करते हैं। इनकी वाणी में कल्याणमयी लक्ष्मी निहित होती है।'

सक्तु शब्द 'सच्' धातु से निष्पन्न है क्योंकि यह कठिनता से धोया जाता है। अथवा कस् धातु को उलटा करके बन जायेगा क्योंकि विकसित होता है। तितउ (चलनी) विस्तार वाली या छिद्रों वाली होती है। धीर अर्थात् ध्यान युक्त, मनसा अर्थात् प्रज्ञान से, वाणी को करते हैं अर्थात् वाणी को शुद्ध करके बोलते हैं। यहाँ लोग सखिभाव सर्वत्र अनुस्यू शब्दतत्त्व अक्षर ब्रह्म को जानते हैं। वे सायुज्य को प्राप्त करते हैं। कैसे? जो ज्ञान से जानने वाला वाणी का दुर्गम मार्ग है। वे कौन हैं? वैयाकरण। यह क्यों? इनकी वाणी में कल्याणमयी वाणी निहित होती है। लक्ष्मी को लक्ष्मी इसलिये कहते हैं क्योंकि वह लक्षण करती है, चमकती है अथवा अधिकार सम्पन्न कराती है।

याज्ञिक लोग पढ़ते हैं—'आहिताग्नि अपशब्द का प्रयोग होने पर प्रायश्चित्त के लिये सरस्वती की इष्टि करें।

प्रायश्चित्तीया मा भूम इत्यध्येयं व्याकरणम् ।

दशम्यां पुत्रस्य—

दशम्यां पुत्रस्य जातस्य नाम विदध्याद् घोषवद् आद्यन्तरन्तःस्थमभिनिष्ठान्तं द्व्यक्षरं चतुरक्षरं वा । कृतं नाम कुर्यान्न तद्धितान्तमिति ।

न चान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् । तस्मादध्येयं व्याकरणम् ।

सुदेवो असि—

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ।। ( ऋ० सं० ८।६९।१२ )

सप्त सिन्धवः सप्त विभक्तयः । काकुद् जिह्वा सास्मिन् विद्यते इति काकुदं तालु । सूर्मिः स्थूला लोहप्रतिमेति ।

एवं 'सिद्धे शब्दार्थसम्बन्धे' इत्यादिवार्तिकोक्तानि अत्रापि प्रयोजनानि अनुसन्धेयानि ।

---

हमें प्रायश्चित्त न करना पड़े, इसलिये व्याकरण पढ़ना चाहिये ।

पुत्र उत्पन्न होने के दस दिन बाद पुत्र का नामकरण करें । नाम का आदि अक्षर घोष, बीच में अन्तस्थ तथा अन्त में विसर्ग हो, नाम दो अक्षर वाला हो । नाम कृदन्त हो, तद्धितान्त नहीं ।

व्याकरण के विना कृदन्त और तद्धितान्त का ज्ञान नहीं हो सकता है । इसलिये व्याकरण का अध्ययन करना चाहिये ।

सुदेवो असि—

हे वरुण ! तुम सुदेव हो जिसके काकुद पर सात नदियाँ अर्थात् सातों विभक्तियाँ उसी प्रकार बहती हैं; जिस प्रकार अग्नि लोहे की प्रतिमा के अन्दर प्रविष्ट होकर जलती है । यहाँ सात नादियाँ सात विभक्तियाँ हैं । काकुद अर्थात् जिह्वा । वह जिसमें रहती है वह काकुद अर्थात् तालु । सूर्मि=स्थूल लोह प्रतिमा ।

इसी प्रकार 'सिद्धे शब्दार्थसम्बन्धे' इत्यादि वार्तिकों में कहे गये प्रयोजनों को यहाँ समझ लेना चाहिये ।

निरुक्तस्य लक्षणप्रयोजने प्रदर्श्य तत्रस्थविषयाणां कात्स्न्येंन विवेचनम्—

अथ निरुक्तप्रयोजनमुच्यते। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। गौः, ग्मा, क्ष्मा, क्षा, क्षमेत्यारभ्य, वसवः, वाजिनः, देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते। एतावन्ति पृथिवीनामान्येतावन्ति हिरण्यनामानीत्येव तत्र तत्र विस्पष्टमभिहितत्वात्। तदेतन्निरुक्तं त्रिकाण्डम्। तच्च अनुक्रमणिकाभाष्ये दर्शितम्—

'आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा।
तृतीयं दैवतश्चेति समाम्नायस्त्रिधा स्थितः॥
गौराद्यापारपर्यन्तमाद्यं नैघण्टुकं मतम्।
जहाद्युल्वमृबीसान्तं नैगमं सम्प्रचक्षते॥
अग्न्यादिदेवपत्न्यन्तं देवताकाण्डमुच्यते।
अग्न्नादिदेवी ऊर्जाहुत्यन्तः क्षितिगतो गणः॥

---

अब निरुक्त का प्रयोजन कहते हैं। अर्थबोध के लिये स्वतन्त्र रूप से जो पदों का संग्रह है वह निरुक्त कहलाता है। जहाँ गौः, ग्मा, ज्मा, क्ष्मा, क्षा, क्षमा आदि पदों से लेकर वसवः, वाजिनः, देव पत्न्यः पर्यन्त पदों का समाम्नाय पठित है, उस ग्रंथ के पदों के अर्थज्ञान के लिये दूसरे शास्त्रों की अपेक्षा नहीं है। क्योंकि इतने हिरण्य के नाम हैं, इस प्रकार जगह-जगह पर स्पष्ट रूप से कह दिया गया है। इस निरुक्त में तीन काण्ड हैं। जो कि अनुक्रमणिका ग्रन्थ के भाष्य में दिखलाया गया है—

'प्रथम नैघण्टुक काण्ड है, द्वितीय नैगम काण्ड है और तृतीय दैवत काण्ड है। इस तरह समाम्नाय इन तीन काण्डों में स्थित है। 'गो' आदि से लेकर 'अपार' तक प्रथम नैघण्टुक काण्ड माना जाता है। 'जहाँ' से लेकर 'उल्बम् ऋबीसम्' तक नैगमकाण्ड कहलाता है। 'अग्नि' से लेकर 'देवपत्नी' पर्यन्त दैवत-काण्ड कहलाता है। इसमें 'अग्नि' से लेकर 'देवी ऊर्जाहुती' तक पृथिवी-

वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः ।
सूर्यादिदेवपत्न्यन्ता द्युस्थाना देवता इति ॥
गौरादिदेवपत्न्यन्तं समाम्नायमधीयते ॥' इति ।

एकार्थवाचिनां पर्यायशब्दानां सङ्घो यत्र प्रायेण उपदिश्यते तत्र निघण्टुशब्दः प्रसिद्धः । तादृशेषु अमरसिंहवैजयन्तीहलायुधादिषु दश निघण्टव इति व्यवहारात् । एवमत्रापि पर्यायशब्दसङ्घोपदेशाद् आद्यकाण्डस्य नैघण्टुकत्वम् । तस्मिन् काण्डे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादिद्रव्यविषयाणि नामानि । द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि । तृतीये तदुभयद्रव्यगतबहुत्वह्रस्वत्वादिधर्मविषयाणि ।

निगमशब्दो वेदवाची, यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानाम् अवतारितत्वात् । तस्मिन् निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात् तस्य काण्डस्य नैगमत्वम् ।

---

स्थानीय देवताओं का समूह है । 'वायु' से लेकर 'भग' तक अन्तरिक्ष-स्थानीय देवता हैं । 'सूर्य' से लेकर 'देवपत्नी' तक द्युस्थानीय देवता हैं । 'गौ' से 'देवपत्नी' तक समाम्नाय कहते हैं ।

एकार्थवाची पर्याय शब्दों के समूह का जहाँ प्रायः उपदेश किया जाता है वहाँ निघण्टु शब्द प्रसिद्ध है । उसी प्रकार अमरसिंह, वैजयन्ती, हलायुध आदि ग्रन्थों को दृष्टि में रखकर व्यवहार किये जाने से निघण्टु दश हैं । इसी प्रकार यहाँ भी पर्याय शब्दों के उपदेश होने से प्रथम काण्ड को नैघण्टुक काण्ड कहा जाता है । उस काण्ड में तीन अध्याय हैं । उनमें से प्रथम में पृथिवी आदि लोक तथा दिव्य काल आदि द्रव्यों के नाम हैं । दूसरे अध्याय में मनुष्य और उसके अवयव आदि द्रव्यों के नाम हैं । तृतीय में उन दोनों प्रकार के द्रव्यों के बहुत्व, ह्रस्वत्व आदि धर्मों के नाम हैं ।

निगम शब्द वेद का वाचक है क्योंकि यास्क ने जगह-जगह पर 'अपि निगमो भवति' इस प्रकार कहकर वेद वाक्यों को उद्धृत किया है । उस

पञ्चमाध्यायरूपस्य तृतीयकाण्डस्य दैवतत्वं विस्पष्टम् ।

पञ्चाध्यायरूपकाण्डत्रयात्मके एतस्मिन् ग्रन्थे परनिरपेक्षतया पदार्थस्य उक्तत्वात् तस्य ग्रन्थस्य निरुक्तत्वम् । तद्व्याख्यानञ्च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यन्तैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते; एकैकस्य पदस्य सम्भाविता अवयवार्थास्तत्र निःशेषेण उच्यन्ते इति व्युत्पत्तेः । तत्र हि, चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेति प्रतिज्ञाय, उच्चावचेषु अर्थेषु निपन्तीति निपातस्वरूपं निरुच्य एवमुदाहृतम्—नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं 'नेन्द्रं देवममंसत्' इति प्रतिषेधार्थीय इति, दूर्मदासो न सुरायां' मित्युपमार्थीय ( नि० १।१।४) इति च । तच्च लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन् ग्रन्थेऽत्र-

---

निगम में ही प्रायः वर्तमान शब्दों का चतुर्थ अध्याय रूप द्वितीय काण्ड में उपदेश होने से उस काण्ड को नैगम कहते हैं

पञ्चम अध्याय रूप तृतीय काण्ड का दैवतकाण्ड कहा जाना स्पष्ट है ।

पञ्चाध्यायरूप तीन काण्डों वाले इस ग्रन्थ में दूसरे शास्त्रों की अपेक्षा न कर पदों का अर्थ कहे जाने से इस ग्रन्थ को निरुक्त कहा जाता है । उसका व्याख्यान 'समाम्नायः समाम्नातः' से लेकर 'तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवति' तक द्वादश अध्यायों के द्वारा यास्क ने किया है । वह भी निरुक्त कहलाता है, उसमें एक-एक पद के सम्भावित अवयवार्थों को निःशेष रूप से कह दिया गया है । वहाँ पर पद के चार भेद हैं—नाम, आख्यात; उपसर्ग और निपात यह प्रतिज्ञा करके 'ऊँचे नीचे अर्थात् अनेक प्रकार के अर्थों में गिरते=कहते हैं, यह निपात का स्वरूप बतलाकर इस प्रकार उदाहरण दिया है 'न' यह निपात लोक भाषा में निषेधार्थ में आता हैं किन्तु वेद में दोनों अर्थों में आता है । 'नेन्द्रं देवममंसत' यहाँ निषेध अर्थ में 'न' का प्रयोग हुआ है, 'दुर्मदासो न सुरायाम्' यहाँ उपमा अर्थ में 'न' प्रयुक्त है । इस प्रकार लोकभाषा में केवल निषेध अर्थ में प्रयुक्त होने वाले नकार का वेद में निषेध और उपमा इन दोनों अर्थों में

गम्यते। एवं ग्रन्थकारेण उक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मन्त्रव्याख्यानावसरे एव अस्माभिरुदाहरिष्यन्ते। न च निर्वचनानां निर्मूलत्वं शङ्कनीयम्, एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषाञ्चिदुक्तत्वात् 'तदाहुतीनाम् आहुतित्वम्' (ऐत० ब्रा० १।१।२) इति; 'तमिदन्द्रं सन्तमिन्द्र इत्याचक्षत' (ऐत० आ० २।४।३) इति, 'यदप्रथयत् तत् पृथिव्याः पृथिवीत्वम्' (तै० ब्रा० १,१।३।६।७) इति च। ग्रन्थकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूलभूतब्राह्मणानि उदाहरिष्यति। केषाञ्चिन् निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति। अत एव ग्रन्थकार आह–'तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च' (नि० १।५) इति। तस्माद् वेदार्थविबोधाय उपयुक्तं निरुक्तम्।

छन्दसः प्रयोजनोपन्यासः—

तथा छन्दोग्रन्थोऽपि उपयुज्यते, छन्दो विशेषाणां तत्र तत्र विहितत्वात्। 'तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातर-

---

प्रयुक्त होने का उदाहरण निरुक्त ग्रन्थ से ज्ञात होता है। इस प्रकार ग्रन्थकार के द्वारा कथित उन-उन पदों का प्रयोग जिन मन्त्रों में हुआ है उन मन्त्रों के व्याख्यान के अवसर पर हम उन निर्वचनों का उदाहरण देंगे। निर्वचनों के निराधारत्व की शङ्का नहीं करनी चाहिये। क्योंकि ब्राह्मण ग्रन्थों में पदों के अर्थ की व्युत्पत्ति के लिये कुछ पदों का निर्वचन किया गया है—'तदाहुतीनामाहुतित्वम्' (ऐत० ब्रा० १।१।२), 'तमिदन्द्र सन्तमिन्द्र इत्याचक्षते' (ऐत० ब्रा० २।४३), यदप्रथयत् तत् पृथिव्याः पृथिवीत्वम्' (तै० ब्रा० १।१।३।६ ७)। ग्रन्थकार यास्क भी जगह-जगह पर अपने द्वारा कहे गये निर्वचनों के आधारभूत ब्राह्मणों का उदाहरण देते हैं। कुछ निर्वचनों के व्याकरण द्वारा सिद्धि नहीं होती है। अतः ग्रंथकार ने कहा है—'यह निरुक्त नामक विद्या स्थान व्याकरण की पूर्ति करने वाला है और स्वार्थ का साधक है।' इसलिये वेदार्थ के अवबोध के लिए निरुक्त उपयुक्त है।

वहीं छन्दग्रन्थ का भी उपयोग है, छन्द विशेष का जगह-जगह पर विधान होने से। 'इसलिये चार अक्षरों से अधिक होने वाले सात छन्दों का प्रातरनु-

नुवाकेऽनूच्यन्ते' ( तै० ब्रा० १।५।१२।१ ) इति हि आम्नातम्। गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि। चतुर्विंशत्यक्षरा गायत्री। ततोऽपि चतुर्भिरक्षरैरधिका अष्टविंशत्यक्षरा उष्णिक्। एवमुत्तरोत्तराधिका अनुष्टुबादयोऽवगन्तव्या। तथा अन्यत्रापि श्रूयते—'गायत्रीभिर्ब्राह्मणस्यादध्यात्, त्रिष्टुब्भी राजन्यस्य, जगतीभिर्वैश्यस्य' ( तै० ब्रा० १।१।९।६।७ ) इति तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुविज्ञेयः। किञ्च, यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति 'वा स्थाणुं वर्च्छति गर्तं वा पद्यति प्र वा मीयते पापीयान् भवति' ( का० १।१ ) तस्मादेतानि मन्त्रे मन्त्रे विद्यामिति श्रूयते। तस्मात् तद्वेदनाय छन्दोग्रन्थ उपयुज्यते।

ज्योतिषस्य प्रयोजनादिनिर्देशः—

---

वाक् में उच्चारण होना चाहिये।' ऐसा तैत्तिरीय ब्राह्मण ( १।५।१२।१ ) में आम्नात है। गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती ये सप्त छन्द हैं। चौबीस अक्षरों की गायत्री है। उससे भी चार अक्षरों से अधिक अर्थात् अट्ठाइस अक्षरों का उष्णिक् होता है। इसी प्रकार उत्तरोत्तर चार चार अधिक अक्षरों वाले अनुष्टुप् आदि को जानना चाहिये। उसी प्रकार दूसरी जगह भी सुना जाता है—'गायत्री छन्द वाले मन्त्रों से ब्राह्मण का अग्न्याधान करें। त्रिष्टुप् छन्द वाले मन्त्रों से राजन्य का और जगती छन्द वाले मन्त्रों से वैश्य का' ( तै० ब्रा० १।१।९।६–७ )। वहाँ मगण यगण आदि के द्वारा साध्य गायत्री आदि का विवेक छन्दोग्रन्थ के विना सुविज्ञेय नहीं है। और भी कहा गया है—जिन मन्त्रों का ऋषि, छन्द, देवता और ब्राह्मण विदित नहीं है ऐसे मन्त्रों से जो यज्ञ कराता है या अध्यापन कराता है वह स्थाणु होता है, गर्त में गिरता है, नष्ट हो जाता है अथवा पाप का भागी होता है। इसलिये प्रत्येक मन्त्र में इन बातों को जानना चाहिये।' इसलिये छन्दों को जानने के लिये छन्दोग्रन्थ उपयुक्त है।

ज्योतिष शास्त्र के प्रयोजन आदि का कथन—

ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थे विहितम्--'यज्ञकालार्थ-सिद्धये' ( वेदाङ्गज्यो० ) इति । कालविशेषविधयश्च श्रूयन्ते—संवत्सरमेतद् व्रतं चरेत्' ( तै० आ० १।३२।१ ) 'संवत्सरमुख्यं भूत्वा' ( तै० सं० ५।६।५।१ ) इत्येवमादयः संवत्सरविधयः, 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत' ( तै० ब्रा० १।१।२।६।७ ) इत्याद्या ऋतुविधयः, 'मासि मासि सत्रपृष्ठानि उपयन्ति, मासि मासि अतिग्राह्या गृह्यन्ते' ( तै० सं० ७।५।१।५ ) इत्याद्या मासविधयः, 'यं कामयेत वसीयान् स्यादिति तं पूर्वपक्षे याजयेद्' ( तै० सं० २।२।३।१ ) इत्याद्याः पक्षविधयः 'एकाष्टकायां दीक्षेरन्' 'फल्गुनीपूर्णमासे दीक्षेरन्' ( तै० सं० ७।४:८।१ ) इत्याद्यास्तिथिविधयः, 'प्रातर्जुहोति' 'सायं जुहोति' (तै० ब्रा० २।१।२) इत्याद्याः प्रातःकालादि विधयः, 'कृत्तिकास्वग्निमादधीत' ( तै० ब्रा० १।१।२।१ ) इत्याद्या नक्षत्रविधयः । अतः कालविशेषान् अवगमयितुं ज्योतिषमुपयुज्यते ।

एतेषां च वेदार्थोपकारिणां षण्णां ग्रन्थानां वेदांगत्वं शिक्षायामेव-मुदीरितम्—

---

ज्योतिष का प्रयोजन उसी ग्रंथ में विहित है--'यज्ञकाल की सिद्धि के लिये' ( वेदांगज्योतिष में ) । विशेषकाल की विधियाँ सुनी जाती हैं—'संवत्सरमेतद् व्रतं चरेत्' ( तै० आ० १।३२।१ ); 'संवत्सरमुख्यं भूत्वा' ( तै० सं० ५।६।५।१ ) इत्यादि संवत्सर-विधियाँ हैं । 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत, शरदि वैश्य आदधीत' ( तै० ब्रा० १ १।२।६–७ ) इत्यादि ऋतु विधियाँ हैं । 'मासि मासि पृष्ठान्युपयन्ति, मासि मासि अतिग्राह्या गृह्यन्ते' इत्यादि मास-विधियाँ हैं । 'य कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेत्' इत्यादि पक्षविधियाँ हैं । 'एकाष्टकायां दीक्षेरन्', फाल्गुनी पूर्णमासे दीक्षेरन्' इत्यादि तिथि विधियाँ हैं । 'प्रातर्जुहोति सायं जुहोति' इत्यादि काल विधियाँ हैं । 'कृत्तिकास्वग्निमादधीत' इत्यादि नक्षत्रों की विधियाँ हैं । अतः कालविशेषों को जानने के लिये ज्योतिष का उपयोग है ।

वेदार्थ में उपयोग करने वाले इन छ ग्रन्थों का वेदाङ्ग होना शिक्षा ग्रन्थों में ही कहा गया है—

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात् सांगमधीत्यैव ब्रह्मलोके महीयते ॥'

(पा० शि० ४१-४२) इति ।

पुराणन्यायादिचतुर्दशविद्यास्थानानां तत्तदधिकारिविशेषनिर्देशमुखेन वेदार्थज्ञानोपयोगित्वम्—
षडङ्गवत् पुराणादीनापि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते--

पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'

(या० स्मृ० १।३) इति ।

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरेदिति ॥'

(म० भा० १।१।२६७)

इत्यन्यत्रापि स्मर्यते ।

ऐतरेयतैत्तिरीयकाठकादिशाखासूक्तानि हरिश्चन्द्रनाचिकेताद्य-

---

छन्द वेद के पैर हैं, कल्प हाथ हैं, ज्योतिष चक्षु है, निरुक्त कान कहा जाता है। शिक्षा वेद की नाक है, व्याकरण को मुख माना है। इसलिये अङ्ग सहित वेदों को पढ़ कर ही ब्रह्मलोक में पूजित होता है।

छ अङ्गों की भाँति पुराणादि का भी वेद के अर्थ को जानने में उपयोग याज्ञवल्क्य ने स्मृति ग्रंथ में बतलाया है—'पुराण, न्याय, मीमांसा, धर्मशास्त्र; छ वेदाङ्ग तथा चार वेद—ये विद्याओं के तथा धर्म के चौदह स्थान हैं— अन्यत्र भी कहा गया है—'इतिहास और पुराण की सहायता से वेद का व्याख्यान करना चाहिये। वेद अल्प श्रुत से यह सोचकर डरता है कि कहीं यह मन्द प्रचार न कर दे।'

ऐतरेय, तैत्तिरीय, काठक आदि शाखाओं में वर्णि

पाख्यानानि धर्मब्रह्मावबोधोपयुक्तानि तेषु तेषु इतिहासग्रन्थेषु स्पष्टीकृतानि। उपनिषदुक्ताः सृष्टिस्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चेति पुराणं पञ्चलक्षणम्'॥
(वि० पु० ३।६।२२)

इति सृष्टयादेः पुराणप्रतिपाद्यत्वावागमात्। न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तादीनां षोडशपदार्थानां निरूपणात्। तदनुसारेण इदं वाक्यमस्मिन् अर्थे प्रमाणं भवति नेतरद् इति निर्णयः कर्तु शक्यते। पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्ट एव। मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसन्ध्यावन्दनादिविधयः प्रपञ्चिताः। 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिता आपः ऊर्ध्वं विक्षिपन्ति' (तै० आ० २।२) इत्यादिकः सन्ध्यावन्दनविधिः। 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते (तै० आ० २।१०) इत्यादिको महायज्ञविधिः। एवं विध्यन्तराणि द्रष्टव्यानि। उक्त-

---

आदि के उपाख्यान धर्म और ब्रह्म के ज्ञान के लिये उपयुक्त हैं और उन-उन इतिहास ग्रन्थों में उन्हें स्पष्ट किया गया है। सृष्टि, स्थिति, लय आदि को ब्रह्म, पद्म, विष्णु आदि पुराणों में स्पष्ट किया गया है। सृष्टि, प्रतिसर्ग, वंश, मन्वन्तर और वंश-परम्परा चरित ये पाँच पुराण के लक्षण हैं।'

इससे ज्ञात होता है कि सृष्टि आदि का पुराणों में प्रतिपादन किया गया है। न्यायशास्त्र में प्रमाण, प्रमेय, संशय, प्रयोजन, दृष्टान्त आदि सोलह पदार्थों का निरूपण हुआ है। तदनुसार यह निर्णय किया जा सकता है कि यह वाक्य इस अर्थ में प्रमाण है, अन्य वाक्य नहीं। पूर्व एवं उत्तर मीमांसा का वेदार्थ के लिये जो उपयोग है वह स्पष्ट ही है। मनु, अत्रि, विष्णु, हारित आदि के द्वारा प्रोक्त स्मृतियों में वेदों में प्रतिपादित सन्ध्या-वन्दनादि विधियाँ वर्णित हैं। 'तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः सन्ध्यायां गायत्र्याभिमन्त्रिता आपः ऊर्ध्वं विक्षिपन्ति' इत्यादि सन्ध्यावन्दन का विधि है। 'पञ्च वा एते महायज्ञाः सतति प्रतायन्ते' इत्यादि महायज्ञ की विधि है। इसी प्रकार अन्य विधियों को

प्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद् विद्यास्थानत्वं युक्तम्। एतैः पुराणादिभिश्चतुर्दशभिर्विद्यास्थानैरुपबृंहिताया विद्याया ग्रहणेऽधिकारविशेषः शाखान्तरगतैश्चतुर्भिर्मन्त्रैरुपदर्शितः। तांश्च, मन्त्रान् यास्क उदाजहार (नि० २।४)।

तत्रायं प्रथमो मन्त्रः—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्यमाजगाम। आगत्य एवं प्रार्थयामास--हे ब्राह्मण, मामनधिकारिणेऽनुपदिश्य पालय। तवाहं निधिवत् पुरुषार्थहेतुरस्मि। तादृश्यां मयि मदुपदेष्टरि त्वयि च योऽसूयां करोति यश्च आर्जवेन विद्यां नाभ्यस्यति, योऽपि स्नानाचमनाद्याचारनियतो न भवति तादृशेभ्यः शिष्याभासेभ्यो मां न ब्रूयाः। तथा सति त्वद्हृदये स्थित्वा फलप्रदा भवेयम्।

---

देखना चाहिये उक्त प्रकार से पुराणादि का वेदार्थ के ज्ञान में उपयोग होने से उनका विद्यास्थान युक्त होता है। इन पुराणादि चौदह विद्यास्थानों के द्वारा उपबृंहित विद्या के ग्रहण में अधिकार— [illegible] के चार मन्त्रों द्वारा किया गया है। उन [illegible]
किया है (निरुक्त २।४)। [illegible]

उनमें पहला मन्त्र यह [illegible]
कर, मैं तुम्हारी निधि हूँ [illegible]
लिए मुझको मत कहो [illegible]

विद्या अभिम[illegible]
आई। आकर [illegible]
दे[illegible]

अथ द्वितीयो मन्त्रः—

य आतृणत्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन्।
तं मन्येत पितरं मातरञ्च तस्मै न द्रुह्येत् कतमच्चनाह ॥इति॥

पूर्वस्मिन् मन्त्रे आचार्यस्य नियममभिधाय अस्मिन् मन्त्रे शिष्यस्य नियमोऽभिधीयते। वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यम्, तद्विपरीतं सत्यं वेदवाक्यमवितथम्। तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावतृणत्ति सर्वतस्तदर्दनं पूरणं करोति। उपसर्गवशादौचित्याच्च तृणत्ति धातोरर्थान्तरे वृत्तिः। सर्वदा वेदं यः श्रावयति इत्यर्थः। किं कुर्वन्? अदुःखं कुर्वन्, मन्दप्रज्ञस्य माणवकस्य आदावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति तथा पादं पादेकदेशं वा ग्राहयन्; किञ्च अमृतं सम्प्रयच्छन्; अमृतत्वस्य देवजन्मनो मोक्षस्य वा प्रापकत्वाद् अमृतं वेदार्थः; तस्य प्रदानं कुर्वन्,

---

बता। ऐसा करने पर तुम्हारे हृदय में स्थित होकर मैं फलप्रदा अर्थात् फलदायिनी होऊँगी।

दूसरा मन्त्र है—

...ता हुआ, मोक्ष प्राप्ति हेतु ज्ञान को देता
...है, उस गुरु को पिता और माता

...कहकर इस मन्त्र में शिष्य के
...र्थभूत लौकिक वाक्य है।
...के वाक्य से जो आचार्य
...सर्ग के कारण और
...अर्थ होता है जो
...। ...दि में
...:
...;
...को

आचार्य को मुख्य माता पिता के रूप में स्वीकार करे । अधम मनुष्य-शरीर के प्रधान कर्ता होने से पूर्वसिद्ध माता-पिता गौण हैं। इसलिए मुख्य माता-पिता रूप आचार्य से किसी प्रकार का भी द्रोह न करे।

पढ़ाया हुआ ब्राह्मण मन, वचन और कर्म से गुरु का आदर नहीं करता है तो गुरु जैसे उसके काम में नहीं आते हैं उसी तरह वह अधीत विषय भी उनके उपयोग में नहीं आता है । जो अधम विप्र गुरु के द्वारा पढ़ाये जाने पर विनयान्वित वाणी से गुरु के हित के चिन्तन से अथवा सेवा कर गुरु का आदर नहीं करते हैं, ऐसा आदर-रहित नाममात्र का शिष्य गुरु के अनुग्रह के योग्य नहीं होता, क्योंकि उनके ऊपर गुरु कृपा नहीं होती है, जिस तरह गुरु के द्वारा वे रक्षणीय नहीं होते उसी तरह उन निम्नस्तर के शिष्यों को गुरु के द्वारा उपदिष्ट वेदवाक्य भी उनका रक्षक नहीं होता है ।

हे विप्रगण, पवित्र प्रमादशून्य मेधावी और ब्रह्मचारी ...
कभी भी द्वेष न करे उसी शिष्य को अपनी ...
उसी को अध्यापन के द्वारा मुझे ...
गुणों से युक्त जिस शिष्य को आ...
से द्वेष न करे उस पालक ...
विद्या प्रदान करें। इस ...
शिष्य को ही वेद-विद्या ...
व्याख्यान किया जाता ...

॥ ऋ...

## ऋग्वेद में इन्द्र

डॉ० सुधा रस्तोगी

इस ग्रंथ में इन्द्र का वृष्टिदेवता के रूप में चित्रण तथा आधिभौतिक [illegible]
रथ के आविष्कर्ता महान् योद्धा के रूप में इन्द्र के विविध रूप के नये
आयामों का साधिकार चित्रण किया गया है। यही नहीं, ऋग्वेद [illegible]
पूर्व बिखरे हुए इन्द्र के धुँधले रूप को वैदिक आलोक में देखते हुए [illegible]
इन्द्र के पौराणिक व्यक्तित्व तथा जैन व बौद्ध साहित्य तक चित्रित स्वरूप
को अब तक उपलब्ध इन्द्रसम्बन्धी समस्त साहित्य के आधार पर एक
विराट् फलक पर उत्कीर्ण किया गया है। ३४--००

## हिन्दी कठोपनिषद्

( शांकरभाष्य सहित के हिन्दी रूपान्तर )

डॉ० कीर्त्यानन्द झा न्याय-वेदान्ताचार्य

[illegible] शिक्षाप्रद सुप्र[illegible] उपाख्यान इस ग्रन्थ का
[illegible]की हिन्दी व्याख्या को शांकरभाष्य के
[illegible]हिन्दी मौलिक रचना ही प्रस्तुत कर
[illegible]रभाष्य के एक-एक पदपर विशद
१०--००

[illegible] सहित )

[illegible] हिन्दी टीकायें जो
[illegible]ती थीं, उसी
[illegible] व्याख्या